काव्यमाला. १७.



श्रीभास्करकविविरचितं

# उन्मत्तराघवम् ।

मूल्यं २ आणकाः ।

KÂVYAMÂLÂ. 17.





# THE UNMATTA-RÂGHAVA

OF

# BHÂSKARA BHATTA.

EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1889.

*Price 2 Annas.*

काव्यमाला. १७.

श्रीभास्करकविविरचितं

# उन्मत्तराघवम् ।




जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८८९



मूल्यं २ आणकाः ।

# काव्यमाला।

## श्रीमद्भास्करकविविरचितम्
## उन्मत्तराघवम्।

कला चान्द्री शंभोः प्रणयकलहप्रापितरुषः
प्रणामे पार्वत्याः पदकमललाक्षापरिचिता।
श्रियै भूयादस्या वदनशशिनः कोपकलुषा-
त्प्रसादेनारुण्यं विनिमयवशेनेव दधती॥ १॥

(नान्द्यन्ते)

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य।) आर्ये, इतस्तावत्।

(प्रविश्य।)

**नटी**—अज्ज, इअं म्हि। को णिओओ आणवेदु। (क)

**सूत्रधारः**—अद्य खल्वादिष्टोऽस्मि विमलतरनिजकीर्तिकर्पूरकरण्डीकृतनिखिलब्रह्माण्डेन दिगन्तदन्तावलकुम्भमण्डलमण्डनायमानप्रतापसिन्दूरेण सकलकलाकलापकोविदेन विद्यारण्यश्रीचरणारविन्दवन्दनमहोत्सवमिलितेनामुना सामाजिकेन, यथा—

---

१. अयं ग्रन्थस्तञ्जोरप्रदेशवर्ति'पल्मर्नेरी'नगराच्छ्रीसुब्रह्मण्यशास्त्रिभिः स्वदेशलिपितो देवनागरलिप्यां परिवर्त्य प्रहितः. अधस्तनी भूमिका च तैरेव लिखितेति परमनुगृहीता वयम्, काव्यमालानुग्राहकाः सहृदयाश्चेति शिवम्॥

'भो भोः काव्यमालासंपादका विद्वन्मुकुटमणिवराः, अतिदुर्लभमिदं महाकविश्रीभास्करविरचितमतिप्राचीनमुन्मत्तराघवं नाम प्रेक्षाणकं मया कुहचनातिमहता प्रयासेन संपाद्य श्रीमतामन्तिकं सकुतुकं प्रैषि। अल्पमपीदमनल्पगुणनिरन्तरतया सुतरां सहृदयहृदयमुल्लासयेदित्येव ममाशयः। तदधुना मुकुन्दानन्दभाणमुद्रणसमन्तरमेवैतन्मुद्रणविषये मय्यनुग्रहबुद्धिः श्रीमद्भिः कार्येति प्रार्थना॥

इति सहृदयसमुदायविधेयः
**सुब्रह्मण्यशास्त्री।'**

---

(क) आर्य, इयमस्मि। को नियोग आज्ञापयतु।

उन्मत्तराघवं नाम यत्प्रेक्षाणकमुक्तवान् ।
भास्करः कृतिनां मान्यस्तत्त्वयाद्य निरूप्यताम् ॥ २ ॥

इति । तदादिश्यतां प्रयत्नः ।

**नटी**—(सविमर्शम् ।) बहुविण्णाणकुसलो क्खु एसो सभाजणो । कहं से हिअअं आवज्जिदुं सक्खिअदि । (क)

**सूत्रधारः**—मा मैवं वक्तव्यम् । विशेषज्ञानामेव गुणग्राहिता नैसर्गिकी । अतस्ते सुखमावर्जनीयाः । शृणु ।

विज्ञानविशदमेव हि चेतः सुजनस्य शक्यते हर्तुम् ।
परिशुद्धमेव लोहं सुतरां कर्षत्ययस्कान्तः ॥ ३ ॥

**नटी**—होदु । जं अणन्तरकरणिज्जं तं अज्जो णिरूवेदु । (ख)

**सूत्रधारः**—नन्विदानीं वर्तते वसन्तसमयः । तथा हिं ।

माकन्दालिं मलयपवना मन्दमान्दोलयन्ते
मज्जत्यस्या मधुकरयुवा मञ्जरीणां मरन्दे ।
आसेवन्ते मुकुलनिकरानासमन्तादशोका
वक्तुं मत्ताः पिकयुवतयः पञ्चमं प्रारभन्ते ॥ ४ ॥

देवि, तत्समयोचितं किंचिद्गीयताम् ।

**नटी**—(गायति ।)

जस्स हि महू अमच्चो दक्खिणपवणो वरूहिणीणाहो ।
पिअभमराणुअरो सो जेदु चिरं वम्महो राओ ॥ ५ ॥ (ग)

**सूत्रधारः**—साधु गीतम् । (अन्यतोऽवलोक्य ।) आर्ये, इतः पश्य ।

मनोहराणामपि मञ्जरीणां विहाय जालानि विशेषलिप्सुः ।
लतान्तराण्येति मधुव्रतालिः सीता यथेयं कुसुमेषु लोभात् ॥ ६ ॥

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(क) बहुविज्ञानकुशलः खल्वेष सभाजनः । कथमस्य हृदयमावर्जयितुं शक्यते ।
(ख) भवतु । यदनन्तरकरणीयं तदार्यो निरूपयतु ।
(ग) यस्य हि मधुरमात्यो दक्षिणपवनो वरूथिनीनाथः ।
प्रियभ्रमरानुचरः स जयतु चिरं मन्मथो राजा ॥

(ततः प्रविशति पुष्पावचयं नाटयन्ती सीता सखी च ।)

**सखी**—हला जाणइ, अग्गदो एव्व कुसुमाइं दीसन्दि । किं अण्णदो दिण्णदिट्ठी गच्छसि । (क)

**सीता**—हला महुअरिए, इदो वि पुरट्ठिदे काणणन्तरे मणोहराइं कुसुमाइं दीसन्दि । ता अहिलासेण गच्छम्मि । (ख)

**मधुकरिका**—हला जाणइ, दाणिं वि अम्हाणं अपरिचिदो पदेसो । काणणेसु सावाणुग्गहसमत्था इसिणो चिट्ठन्ति । अदो जस्सिं कस्सिं वि अस्समे कुसुमेसु गहिदेसु जो को वि कुप्पइ । रामभद्दो वि तुह पिअं कादुं कणअमिअं गेण्हिअ मिअआवावारादो दाणिं एव्व णिवट्टिस्सदि । ता एत्तिएहिं कुसुमेहिं णिवत्तेमो । (ग)

**सीता**—सव्वजणसाहारणाइं क्खु वणलदाइं फलपुप्फमूलाइं णईजलाइं अ । अदो किंणिमित्तं जो को वि कुप्पदि । (पुष्पभाजनं विलोक्य ।) अज्जउत्तस्स देव्वच्चणोपजुत्ताइं कुसुमाइं पज्जत्ताइं । इदो पुरट्ठिदे काणणन्तरे मणोहराइं कुसुमाइं अहिगेण्हिअ उडअं गच्छम्हो । (घ)

(इत्युभे प्रस्थिते ।)

---

(क) सखि जानकि, अग्रत एव कुसुमानि दृश्यन्ते । किमन्यतो दत्तदृष्टिर्गच्छसि ।

(ख) सखि मधुकरिके, इतोऽपि पुरःस्थिते काननान्तरे मनोहराणि कुसुमानि दृश्यन्ते । तस्मादभिलाषेण गच्छामि ।

(ग) सखि जानकि, इदानीमप्यस्माकमपरिचितः प्रदेशः । काननेषु शापानुग्रहसमर्था ऋषयस्तिष्ठन्ति । अतो यस्मिन्कस्मिन्नप्याश्रमे कुसुमेषु गृहीतेषु यः कोऽपि कुप्यति । रामभद्रोऽपि तव प्रियं कर्तुं कनकमृगं गृहीत्वा मृगयाव्यापारादिदानीमेव निवर्तिष्यते । तस्मादेतावद्भिः कुसुमैर्निवर्तावहे ।

(घ) सर्वजनसाधारणानि खलु वनलताः फलपुष्पमूलानि नदीजलानि च । अतः किंनिमित्तं यः कोऽपि कुप्यति । आर्यपुत्रस्य देवार्चनोपयुक्तानि कुसुमानि पर्याप्तानि । इतः पुरःस्थिते काननान्तरे मनोहराणि कुसुमान्यभिगृह्योटजं गच्छावः ।

**सीता**—(सदृष्टिक्षेपम् ।) हला, इदो भमरो किंणिमित्तं संभमन्तो दे देसु लदाविडवेसु कुसुमकोडरेसु आलुठन्तो परिब्भमइ । (क)

**मधुकरिका**—(विभाव्य ।) हला, मअरन्दपाणणिच्चलपक्खदाए पल्ल वन्तरिदं इमं सहअरिं भमरिं अवेक्खन्तो अविलोअणवेअणाए णूणं उ म्मत्तो संवुत्तो । (ख)

**सीता**—(विलोक्य ।) हला, साहु लक्खिदं तुए । (ग)

**मधुकरिका**—अम्हहे । सविसेसं परिब्भमन्तो वि एसो सहअरिं ण पेक्खदि । (घ)

**सीता**—महुअरिए, संजोजेहि णं । (ङ)

**मधुकरिका**—इमिणा सहआरदण्डेण मञ्जरिं ताडिअ मअरन्दपाण णिच्चलं भमरिं उड्डावेमि । (तथा कृत्वा ।) अम्हहे । मञ्जरीए उड्डिदाए त सहअरीए संगदो इमो महुअरो माहवीमण्डवं अहिरुहिअ महुरसं पि बन्तो सुहं वट्टइ । (वनान्तरं विलोक्य सावेगम् ।) कहिं गदा जाणई । (पुन विलोक्य ।) अम्हहे । ण कस्सिं वि दीसइ । (वनान्तरं प्रविश्य सर्वत्रान्विष्यन्ती ।) अम्हहे । इअं मणोहराकिदी का वि हरिणी सिणिद्धाए दिट्ठिए मं पेक्खिअ णिस्सरन्तेहिं णअणसलिलेहिं सहीसिणेहं सूअदि । मह हिअअं वि एदस्सिं चिरपरिचिदं विअ विस्सद्धं होदि । अहवा इमाए जणणन्तरस- हीए होदव्वम् । (इति ससंभ्रमं परिभ्रमन्ती सविमर्शम् ।) एत्थ महेसिणो अ- स्समप्पहावादो दुट्ठमिआणं संचारो णत्थि । ता कहिं पत्थिदा जाणइत्ति मे अच्चरिअं होदि । (निःश्वस्य ।) मन्दभाइणी अहं खु । मिअआवावारादो णि-

---

(क) सखि, इतो भ्रमरः किंनिमित्तं संभ्रमंस्तेषु तेषु लताविटपेषु कुसु- मकोटरेष्वालुठन्परिभ्रमति ।

(ख) सखि, मकरन्दपाननिश्चलपक्षतया पल्लवान्तरितामिमां सहचरीं भ्र- मरीमप्रेक्षमाणोऽविलोकनवेदनया नूनमुन्मत्तः संवृत्तः ।

(ग) सखि, साधु लक्षितं त्वया ।

(घ) आश्चर्यम् । सविशेषं परिभ्रमन्नप्येष सहचरीं न पश्यति ।

(ङ) मधुकरिके, संयोजयैनम् ।

उत्तस्स रामभद्दस्स कहं कहइस्सम् । रामभद्दो वि सुणिअ कीरिसं अवत्थन्तरं अणुहविस्सदित्ति वेवइ मे हिअअम् । (क)

(नेपथ्ये कलकलः ।)

**मधुकरिका**—इदो तदो वि संभमन्ता तावसजणा दीसन्ति । अदो रामभद्दो वि आअच्छदित्ति तक्केमि । (ख)

(पुनर्नेपथ्ये ।)

संमृज्यन्तां पदव्यः करधृतकलशावर्जितैस्तोयपूरैः
सिच्यन्तामासमन्तादविरलमभितः कीर्णपुष्पाः क्रियन्ताम् ।
जीवग्राहं गृहीत्वा कनकमृगमसौ जानकीप्रीतिहेतोः
संप्राप्तः काननान्तात्समधिकमहिमा सत्वरं रामभद्रः ॥ ७ ॥

अयं हि

प्रतिपदमुपयान्तं लक्ष्मणं वीक्ष्य किंचि-
द्वलितनयनकोणेनादराद्भाषमाणः ।
श्रमजललसदास्यः शोभते चापदण्डं
शिथिलितगुणबन्धं स्कन्धदेशे दधानः ॥ ८ ॥

---

(क) अनेन सहकारदण्डेन मञ्जरीं ताडयित्वा मकरन्दपाननिश्चलां भ्रमरीमुत्थापयामि। आश्चर्यम्। मञ्जर्या उत्थितया तया सहचर्या संगतोऽयं मधुकरो माधवीमण्डपमधिरुह्य मधुरसं पिबन्सुखं वर्तते। कुत्र गता जानकी। आश्चर्यम्। न कुत्रापि दृश्यते । आश्चर्यम्। इयं मनोहराकृतिः कापि हरिणी स्निग्धया दृष्टया मां दृष्ट्वा निःसरद्भिर्नयनसलिलैः सखीस्नेहं सूचयति। मम हृदयमप्येतस्यां चिरपरिचितमिव विस्रब्धं भवति । अथवानया जनान्तरसख्या भवितव्यम् । अत्र महर्षेराश्रमप्रभावाद्दुष्टमृगाणां संचारो नास्ति । तस्मात्कुत्र प्रस्थिता जानकीति म आश्चर्यं भवति । मन्दभागिन्यहं खलु । मृगयाव्यापारान्निवृत्तस्य रामभद्रस्य कथं कथयिष्ये । रामभद्रोऽपि श्रुत्वा कीदृशमवस्थान्तरमनुभविष्यतीति वेपते मे हृदयम् ।

(ख) इतस्ततोऽपि संभ्रमन्तस्तापसजना दृश्यन्ते। अतो रामभद्रोऽप्यागच्छतीति तर्कयामि ।

**मधुकरिका**—(ससंभ्रमम् ।) अए, कणअमिअं गेण्हिअ अन्तिअत्थेण लक्खणेण किं वि मन्तअन्तो रामभद्दो एव्व आअच्छदि । अहं से मग्गं परिहरिअ चिट्ठामि । (तथा करोति ।) (क)

(ततः प्रविशति यथानिर्दिष्टः सलक्ष्मणो रामः ।)

**रामः**—वत्स, नूनमिमं कनकमृगं विलोक्य जानकी सविशेषं तुष्यति।

**लक्ष्मणः**—वचनमात्रेण देव्याः कुतूहलं निवर्तयतस्तवार्यं प्रसाद एव कनकमृगलाभादपि महान्तं परितोषमापादयति ।

**रामः**—(निमित्तमभिनीय ।) वत्स, महामुनेरगस्त्यस्य सामर्थ्यादपगतसकलभये तपोवने सख्या मधुकरिकया सह वर्तमानामपि जानकीं विचिन्त्य, अपरिचितप्रदेशतया मनः शङ्काकुलमास्ते ।

**लक्ष्मणः**—प्रेमविशेषो हि प्रियजने प्रथमं प्रमादमेव चिन्तयति ।

**मधुकरिका**—(सनिःश्वासम् ।) सव्वहा जदाकदावि कहणिज्जो जेव्व सो उत्तन्तो । ता गच्छम्हि । दाणिं एव्व कहेमि । (उपसर्पति ।) (ख)

**लक्ष्मणः**—(मधुकरिकां दृष्ट्वा स्वगतम् ।) एकाकिनी दीनमुखी मधुकरिका समागच्छति । सर्वथात्याहितेन भवितव्यं देव्याः सीतायाः ।

**मधुकरिका**—जेदु महाराओ । (ग)

**रामः**—मधुकरिके, क्वास्ते जानकी.।

**मधुकरिका**—(सगद्गदम् ।) देव्व, तुम्हाणं देव्वच्चणाए उडअसमीवट्ठिदासु लदासु कुसुमाइं अवचिणोमि त्ति णिग्गदा । (घ)

---

(क) अये, कनकमृगं गृहीत्वान्तिकस्थेन लक्ष्मणेन किमपि मन्त्रयन्रामभद्र एवागच्छति । अहमस्य मार्गं परिहृत्य तिष्ठामि ।

(ख) सर्वथा यदाकदापि कथनीय एव स वृत्तान्तः । तद्गच्छामि । इदानीमेव कथयामि ।

(ग) जयतु महाराजः ।

(घ) देव, युष्माकं देवार्चनायै उटजसमीपस्थितासु लतासु कुसुमान्यवचिनोमीति निर्गता ।

**लक्ष्मणः**—देवतार्चनाकुसुमान्यवचेतव्यान्येव ।

**रामः**—(स्वगतम् ।) किमतःपरं कथयिष्यतीति कम्पते मे चेतः । (प्रकाशम् ।) ततस्ततः ।

**मधुकरिका**—मणोहराइं कुसुमाइं दीसन्दि त्ति इदं काणणन्तरं पविट्ठा जाणई अण्णेसन्दीए मए ण दिट्ठा । (क)

**रामः**—हा, हतोऽस्मि ।

ज्वलत्तुषाराग्निकणोपमानि सीता न दृष्टेति दुरक्षराणि ।
कर्णं प्रविष्टानि हठादमूनि सर्वाङ्गतापं जनयन्ति हन्त ॥ ९ ॥

कष्टम् । अतिदारुणो दैवदुर्विपाकः ।

अम्बाजनं च पितरं च सहोदरौ च
राज्यं च तानि भवनानि सबान्धवानि ।
दैवाद्विहाय विपिने वसतां तथापि
हन्तातिदुःखमविषह्यमुपागतं नः ॥ १० ॥

हा जानकि,

विरहं मम सोढुमक्षमा त्वं वनवीथीष्वपि मामनुद्रुतासि ।
अकृतागसमेनमद्य मुक्त्वा वद कुत्रासि कुरङ्गशावनेत्रे ॥ ११ ॥

**लक्ष्मणः**—(स्वगतम् ।) इममार्यः पश्यति चेदतिपीडितो भविष्यति । तदेनं प्रेषयामि । (अपवार्य ।) मधुकरिके, इममुटजं नय । अहमार्यसमीपे तिष्ठामि ।

**मधुकरिका**—(कनकमृगमादाय ।) तह । (इति निष्क्रान्ता ।) (ख)

**रामः**—

प्राणप्रियां प्राप्तवतीं कठोरामकीर्तितव्यां पदवीमकाण्डे ।
त्रैलोक्यलावण्यललामभूतां हा जानकीं कुत्र विलोकयामि ॥ १२ ॥

---

(क) मनोहराणि कुसुमानि दृश्यन्त इतीदं काननान्तरं प्रविष्टा जानकी अन्वेषन्त्या मया न दृष्टा ।

(ख) तथा ।

**लक्ष्मणः**—किमेवं खिद्यसे। इदं वनं प्रविश्यान्विष्यद्भिर्दृश्यते देवी।

**रामः**—मन्दभाग्ययोर्मम चक्षुषोरतःपरं कुतः सीतादर्शनसुखम्। तथापि प्रतिपादय ।

**लक्ष्मणः**—इत इतः ।

(उभौ परिक्रम्य वनं प्रविशतः ।)

**लक्ष्मणः**—आर्य, सिकतावति प्रदेशे स्पष्टं प्रतीयते देव्याः पदपद्धतिः।

**रामः**—(विलोक्य ।) नूनमियं प्रियायाश्चरणसरणिः । तथा हि ।

स एवाङ्गुलिविन्यासः स एव चरणक्रमः ।
तदेवाल्पप्रदेशत्वं सैव विक्षेपचातुरी ॥ १३ ॥

(निःश्वस्य ।)

प्रणतात्प्रणयापराधकाले शिरसो मे पतितैः प्रसूनजालैः ।
कृतपूजनयोर्मृगेक्षणायाः पदयोरत्र विलोकयामि मुद्राम् ॥ १४॥

(पदसरणिमनुसरन्, विलोक्य ।)

अश्रुबिन्दुचयमञ्जनाञ्चितं मुञ्चती प्रणयकोपनिर्गतम् ।
पाटलं विनमितं मुखाम्बुजं बिभ्रतीयमिह दृश्यते प्रिया ॥ १५ ॥

(उपसृत्य ।) प्रिये, प्रसीद प्रसीद ।

अयि मुञ्च रुषं तव प्रसन्नं जितपूर्णेन्दु मुखारविन्दमस्तु ।
प्रणतिं कलयन्नहं त्वदीयां पदलाक्षां परिपालयामि मूर्ध्ना ॥ १६ ॥

(इति तत्रस्थितां पादमुद्रां प्रणमति ।)

**लक्ष्मणः**—कष्टमार्यस्योन्माददशा वर्तते । आर्य, न जानकी । (इति मूर्धानमुन्नमयति ।)

**रामः**—(उत्थाय स्थलपद्मिनीं विलोक्य ।) मधुभरनमितप्रसूनां महीतलगलितमकरन्दपानाय कमलोदरादापतन्त्या मधुकरमालया स मे तामरुणां स्थलपद्मिनीं विलोक्य मूढोऽस्मि ।

**लक्ष्मणः**—अहो, ज्ञानाज्ञानयोः संकरः । तथा हि ।

वाक्यानि कानिचिदयुक्ततराणि वक्ति
ब्रूते च कान्यपि तथापि यथार्थवन्ति ।

आर्ये सहैव वसतस्तद्बोधबोधौ
छायातपाविव तलेऽल्पदलद्रुमस्य ॥ १७ ॥

**रामः**—भवतु । एतामेव पृच्छामि ।
त्वामागतेयं पदपङ्क्तिरस्याः प्रयच्छ मे पद्मिनि पद्मवक्त्राम् ।
न चेत्तदीयां चरणाब्जमुद्रां प्रदर्शयान्यत्र विनिर्गतां मे ॥ १८ ॥

(विभाव्य ।) इयमपि चलितकमलमुखसंज्ञया पदपद्धतिमितः प्रयातामावेदयति ।

**लक्ष्मणः**—इतः सहकारवाटिकामुपगता पादमुद्रा ।

(उभौ चूतवाटिकामुपसरतः ।)

**लक्ष्मणः**—(स्वगतम् ।) आर्यस्य हृदयमन्यतो नयामि । (प्रकाशम् ।)

किसलयपरिपाटीं किंचिदग्रे विधुन्व-
न्प्रतिपदमुप(मनु)यातः पङ्क्तिभिः षट्पदानाम् ।
अभिनवमकरन्दानाहरन्मञ्जरीणां
मलयशिखरिजन्मा मारुतो याति मन्दम् ॥ १९ ॥

**रामः**—अये, विरहिजनवनदावानलः समीरणः ।
सर्वस्य जगतः प्राण इति त्वां ब्रुवते वृथा ।
जगदन्तःस्थितस्यैव यतो मे प्राणहारकः ॥ २० ॥

तथा हि ।
अङ्गं यदि प्रियायाः स्पृष्टं भवता शिरीषसुकुमारम् ।
तर्ह्यालिङ्ग ममाङ्गान्यपसर तूर्णं न चेत्पवन ॥ २१ ॥

(विभाव्य ।) भवतु, प्रेयसीमेव पृच्छामि ।
जगत्प्राण मम प्राणकान्ता कान्तारसीमनि ।
भ्रमता भवता दृष्टा किं सा हंसलसद्गतिः ॥ २२ ॥

अये, प्रियाया निसर्गसुरभिणा मुखमारुतेन तिरस्कृततया वैरमनुस्मरंस्तूष्णीमुपयासि ।

माकन्दपालीमकरन्दपूरे मधुव्रता मज्जनमाचरन्तः ।
मानापनोदाय मनस्विनीनां मानोभवं मन्त्रमुदीरयन्ति ॥ २३ ॥

**लक्ष्मणः**—किमेवं खिद्यसे। इदं वनं प्रविश्यान्विष्यद्भिर्दृश्यते देवी।

**रामः**—मन्दभाग्ययोर्मम चक्षुषोरतःपरं कुतः सीतादर्शनसुखम्। तथापि प्रतिपादय।

**लक्ष्मणः**—इत इतः।

(उभौ परिक्रम्य वनं प्रविशतः।)

**लक्ष्मणः**—आर्य, सिकतावति प्रदेशे स्पष्टं प्रतीयते देव्याः पदपद्धतिः।

**रामः**—(विलोक्य।) नूनमियं प्रियायाश्चरणसरणिः। तथा हि।

स एवाङ्गुलिविन्यासः स एव चरणक्रमः।
तदेवाल्पप्रदेशत्वं सैव विक्षेपचातुरी ॥ १३ ॥

(निःश्वस्य।)

प्रणतात्प्रणयापराधकाले शिरसो मे पतितैः प्रसूनजालैः।
कृतपूजनयोर्मृगेक्षणायाः पदयोरत्र विलोकयामि मुद्राम् ॥ १४ ॥

(पदसरणिमनुसरन्, विलोक्य।)

अश्रुबिन्दुचयमञ्जनाञ्चितं मुञ्चती प्रणयकोपनिर्गतम्।
पाटलं विनमितं मुखाम्बुजं बिभ्रतीयमिह दृश्यते प्रिया ॥ १५ ॥

(उपसृत्य।) प्रिये, प्रसीद प्रसीद।

अयि मुञ्च रुषं तव प्रसन्नं जितपूर्णेन्दु मुखारविन्दमस्तु।
प्रणतिं कलयन्नहं त्वदीयां पदलाक्षां परिपालयामि मूर्ध्ना ॥ १६ ॥

(इति तत्रस्थितां पादमुद्रां प्रणमति।)

**लक्ष्मणः**—कष्टमार्यस्योन्माददशा वर्तते। आर्य, न जानकी। (इति मूर्धानमुन्नमयति।)

**रामः**—(उत्थाय स्थलपद्मिनीं विलोक्य।) मधुभरनमितप्रसूनां महीतलगलितमकरन्दपानाय कमलोदरादापतन्त्या मधुकरमालया स मे तामरुणां स्थलपद्मिनीं विलोक्य मूढोऽस्मि।

**लक्ष्मणः**—अहो, ज्ञानाज्ञानयोः संकरः। तथा हि।

वाक्यानि कानिचिदयुक्ततराणि वक्ति
ब्रूते च कान्यपि तथापि यथार्थवन्ति।

आर्ये सहैव वसतस्तद्बोधबोधौ
छायातपाविव तलेऽल्पदलद्रुमस्य ॥ १७ ॥

**रामः**—भवतु । एतामेव पृच्छामि ।

त्वामागतेयं पदपङ्क्तिरस्याः प्रयच्छ मे पद्मिनि पद्मवक्त्राम् ।
न चेत्तदीयां चरणाब्जमुद्रां प्रदर्शयान्यत्र विनिर्गतां मे ॥ १८ ॥

(विभाव्य ।) इयमपि चलितकमलमुखसंज्ञया पदपद्धतिमितः प्रयातामावेदयति ।

**लक्ष्मणः**—इतः सहकारवाटिकामुपगता पादमुद्रा ।

(उभौ चूतवाटिकामुपसरतः ।)

**लक्ष्मणः**—(स्वगतम् ।) आर्यस्य हृदयमन्यतो नयामि । (प्रकाशम् ।)

किसलयपरिपाटीं किंचिदग्रे विधुन्व-
न्प्रतिपदमुप(मनु)यातः पङ्क्तिभिः षट्पदानाम् ।
अभिनवमकरन्दानाहरन्मञ्जरीणां
मलयशिखरिजन्मा मारुतो याति मन्दम् ॥ १९ ॥

**रामः**—अये, विरहिजनवनदावानलः समीरणः ।

सर्वस्य जगतः प्राण इति त्वां ब्रुवते वृथा ।
जगदन्तःस्थितस्यैव यतो मे प्राणहारकः ॥ २० ॥

तथा हि ।

अङ्गं यदि प्रियायाः स्पृष्टं भवता शिरीषसुकुमारम् ।
तर्ह्यालिङ्ग ममाङ्गान्यपसर तूर्णं न चेत्पवन ॥ २१ ॥

(विभाव्य ।) भवतु, प्रेयसीमेव पृच्छामि ।

जगत्प्राण मम प्राणकान्ता कान्तारसीमनि ।
भ्रमता भवता दृष्टा किं सा हंसलसद्गतिः ॥ २२ ॥

अये, प्रियाया निसर्गसुरभिणा मुखमारुतेन तिरस्कृततया वैरमनुस्मरंस्तूष्णीमुपयासि ।

माकन्दपालीमकरन्दपूरे मधुव्रता मज्जनमाचरन्तः ।
मानापनोदाय मनस्विनीनां मानोभवं मन्त्रमुदीरयन्ति ॥ २३ ॥

अपि च।

माकन्दवृन्दमकरन्दजलेषु मग्ना
धृत्वा च पङ्कजरजांसि मधुव्रतालिः।
मानापनोदनफलाय मनस्विनीनां
मन्त्रानुदीरयति मन्मथदेवताकान् ॥ २४ ॥

किं [च] निरन्तरमधुरसास्वादमत्तानाममीषां वचनमप्रमाणमेव। अ
प्रियागतिर्न प्रष्टव्या। (पदान्तरमभिनीय कर्णं दत्त्वा।) वत्स,

सरोजनेत्रा सहकारवीथ्यां नवप्रवालान्तरिता प्रिया मे।
अव्यक्तवर्णं किमपि ब्रुवाणा समुत्सुकं मे हृदयं तनोति ॥ २५ ॥

**लक्ष्मणः**—(स्वगतम्।) कोकिलालापमाकर्ण्य भ्रान्तो नूनमार्यः।

**रामः**—अये, प्रियालाप इव श्रूयते नाकृतिस्तु दृश्यते। अतः
प्रार्थयामि।

चेतसः सपदि जीवनौषधं नेत्रयोरमृतवर्तिकाञ्जनम्।
मन्मथज्वरमहारसायनं दर्शयस्व दयिते तवाकृति(नन)म् ॥ २६ ॥

(क्षणमात्रं तूष्णीं स्थित्वा।) अयि जानकि, किमित्यौदासीन्यं भजसि।

आगत्य तूर्णमसितोत्पलरम्यनेत्रे
कण्ठं बधान मम ते भुजवल्लरीभ्याम्।
पश्चादुपेत्य निभृतं पदमर्पयन्ती
यद्वा पिधेहि नयने करपल्लवाभ्याम् ॥ २७ ॥

(इति नयने निमील्य तिष्ठति।)

**लक्ष्मणः**—(स्वगतम्।) कष्टं प्रतीकारदुःस्थे कर्मणि किं कुर्मः।

**रामः**—प्रिये, किमिति विलम्बसे। उभयोः पक्षयोरेकतरमाचर।

**लक्ष्मणः**—आर्य, एष कोकिलालापः श्रूयते। नात्र जानकी स
ज्वलति (?)।

**रामः**—(नेत्रे निमील्य पुनः कर्णं दत्त्वा।) स एवेदानीं श्रुतवीणारवस्य ढ
क्काध्वनिरिव कठोरतां भजति।

(लक्ष्मणोऽन्यतो दर्शयति ।)

**रामः**—(विलोक्य ससंभ्रमम् ।) वत्स, केचिदमी चोराः प्रियायाः सर्वाभरणजातमादाय मस्तके दधानाः प्रसारितबाहवो मया योद्धुमग्रतो निःशङ्कमासते । पश्य पश्य ।

मुक्ताहारच्छटामेके पद्मरागावलिं परे ।
प्रियायाः कनकाकल्पानपरे हन्त बिभ्रति ॥ २८ ॥

**लक्ष्मणः**—(स्वगतम् ।) कष्टमार्यस्य पुनरप्युन्मादः ।

**रामः**—भो भोश्चोराः, तिष्ठत । ममाग्रतः कुतो गम्यते । इदानीमेव धनुरारोप्यैकेनैव सायकेन सर्वान्वः पातयामि । (इति साटोपं परिक्रम्य धनुरारोपयति ।)

**लक्ष्मणः**—(सज्जं धनुरवलम्ब्य ।) अलमाटोपेन ।

**रामः**—वत्स, मुञ्च मुञ्च बाणं संधास्यामि । अमी पुनरत्रैव निर्भया निश्चलमासते । (इति तूणीरमुखाद्बाणमुद्धर्तुमिच्छति ।)

**लक्ष्मणः**—

निषङ्गान्निर्गते बाणे परेषां प्राणनिर्गमः ।
तदेव ज्ञायते देव संधानं किंप्रयोजनम् ॥ २९ ॥

अतः शरसंधानं विहाय विभावयत्वार्यः, नात्र चोराः ।

**रामः**—(विभाव्य ।) अहो, मे मूढा मतिः । तथा हि ।

आरक्तोऽयमशोककुड्मलचयो नो पद्मरागच्छटा
फुल्लोऽयं नवकर्णिकारनिकरो न स्वर्णभूषावलिः ।
एषा च स्फुटसिन्धुवारपटली नो मौक्तिकानां व्रजः
शाखाजालभृतस्त एव तरवो नोद्यद्भुजा दस्यवः ॥ ३० ॥

**लक्ष्मणः**—इतोऽपि लताकुञ्जेषु विभावयावः ।

**रामः**—तथा । (इति पदान्तरे स्थित्वा विलोक्य सहर्षम् ।) वत्स, दृष्टा जानकी ।

स्तनभरविनम्रमूर्तिर्मामिह चाहूय पाणिचलनेन ।
कर्णामृतैर्वचोभिः कलयति मम हृदयमाहितानन्दम् ॥ ३१ ॥

**लक्ष्मणः**—अहो, चिरमुन्मादो वर्तते ।

**रामः**—अये जानकि, एतवान्तं कालं कुत्र गतासि । (कर्णं दत्त्वा ।) किं ब्रवीषि—'आर्यपुत्रस्य प्रेमपरीक्षार्थं क्वचिल्लताकुञ्जे निगूढास्मि' इति ।

**लक्ष्मणः**—क्वास्ते जानकी ।

**रामः**—(अनाकर्णितकेन ।)

त्वदालापाः कर्णे मम नवसुधाशीकरमया-
स्तव स्पर्शोऽप्यङ्गे शिशिरशिशिरश्चन्दनरसः ।
शरज्ज्योत्स्नापूरस्तव वपुरिदं मे नयनयोः
कथं ते कल्याणि क्षणमपि सहे हन्त विरहम् ॥ ३२ ॥

**लक्ष्मणः**—आर्य, क्वास्ते जानकी ।

**रामः**—नन्वियमग्रत एवास्ते । (इति पुरोपस्थितां लतामुपसृत्य विलोक्य ।) अहो मे मोहः ।

कुसुमस्तबकानता विलोलां दधती पल्लवसंपदं मनोज्ञाम् ।
मकरन्दलिहां मधुव्रतानां कलझंकारकरम्बिता लतेयम् ॥ ३३ ॥

(पुनर्विलोक्य ।) वत्स, अस्यामेव लतायां पुष्पाण्यवचितवती जानकीति तर्कयामि । तथा हि ।

अवचितकुसुमानि तया केवलवृन्तावशेषितान्यधुना ।
पतिताः पल्लवभङ्गा लक्ष्यन्ते तत इतश्चामी ॥ ३४ ॥

**लक्ष्मणः**—एवमेतत् । पदपद्धतिरप्यविच्छिन्ना लतामिमां प्राप्ता ।

**रामः**—इतः परं कां दिशं प्रस्थितेति विलोकय ।

**लक्ष्मणः**—तथा । (इति लतां परिभ्रमन्, मणिवलयं विलोक्य, स्वगतम् ।) इदं देव्याः करपरिभ्रष्टम् । तदार्यस्य हृदयविनोदनार्थमवसरे दर्शयामि । (इत्यादाय पटान्ते पिदधाति । उपसृत्य प्रकाशम् ।) आर्य, नेतःपरं कुत्रापि लक्ष्यते पादमुद्रा । किंतु वने संचरतः कस्यापि मृगस्यात्रैवाभिव्यक्ता पदसरणिरालोकिता ।

**रामः**—हन्त, निराशाः स्मः । अये जानकि,

आयतेक्षणमरालकुन्तलं पक्वबिम्बफलपाटलाधरम् ।
मञ्जुभाषिणि ममाक्षिगोचरं कल्पते तव कदा मुखाम्बुजम् ॥ ३५ ॥

(परितोऽवलोक्य ।) अये, प्रियायाः किंचिदपि वस्तु न लक्ष्यते । केनाहं हृदयमवलम्बे ।

**लक्ष्मणः**—आर्य, देव्याः करपरिभ्रष्टमिदं मणिवलयम् । तदवधारयत्वार्यः । (इति ददाति ।)

**रामः**—(गृहीत्वा सहर्षम् ।)

मम हृदयमिदं चिराय किंचिद्विगलिततापरुजं वितन्वदेतत् ।
कथमपि करपल्लवात्प्रियाया मणिवलयं पतितं मयाद्य लब्धम् ॥३६॥

(हृदये निक्षिपन् ।)

एतत्पुरा मम गलं परिपीड्य गाढं
च्छिन्नं व्यधत्त बहुशः परिरम्भणेषु ।
बिम्बाधरं मयि रसात्पिबति प्रियायाः
कोलाहलं च कृतवत्करधूननेषु ॥ ३७ ॥

(निःश्वस्य ।) वत्स, क्व जानकीं पश्यामः । कुत्र वनान्तः पुनरन्विष्यामः । केषु वा निकुञ्जेषु पुनर्विलोकयामः । हन्त, सर्वथा निराशाः स्मः ।

दिशो विलोकयाम्यद्य ज्वालापरिवृता इव ।
बाढं जगदिदं मन्ये ह्यद्य मे प्रियया विना ॥ ३८ ॥

**लक्ष्मणः**—अहो, कष्टमार्यस्येयं दशा वर्तते ।

**रामः**—किमत्रास्महे ।

वत्सा याहि गृहं व्रजाम

**लक्ष्मणः**— किमिदं गेहं

**रामः**— कुतः

**लक्ष्मणः**— कानने

वत्स्यामः

**रामः**— कथमागता वनभुवं

**लक्ष्मणः**— तातज्ञया यन्त्रिताः ।

**रामः**—

आयाताः कति वा वयं कथय मे

**लक्ष्मणः**— देव त्रयः

**रामः**— के च ते

**लक्ष्मणः**—

त्वं चाहं जनकात्मजा च

**रामः**— दयिते कुत्रासि हा जानकि ॥३६

(नेपथ्ये ।)

वत्से, मा भैषीः ।

**लक्ष्मणः**—(कर्णं दत्त्वा सहर्षं विभाव्य ।) आर्य, मधुकरिकासमेतां जानकीं समाश्वासयन्कुम्भसंभवो महर्षिरित एवाभिवर्तते ।

(ततः प्रविशति यथानिर्दिष्टः कुम्भसंभवः ।)

**अगस्त्यः**—वत्से, मा भैषीः । अयमिह त्वामन्विष्यन्नास्ते सलक्ष्मणो रामभद्रः ।

**सीता**—(रामं विलोक्य लज्जां नाटयन्ती स्वगतम् ।) एदेहिं विलोअणेहिं अज्जउत्तो दिट्ठो त्ति अहो मे भाअहेअम् । (क)

**रामः**—भगवन्, अभिवादये ।

**अगस्त्यः**—आयुष्मानेधि ।

**लक्ष्मणः**—भगवन्, अभिवादये ।

**अगस्त्यः**—वत्स, चिरं जीव ।

**सीता**—जेदु जेदु अज्जउत्तो । (ख)

**मधुकरिका**—जेदु जेदु महाराओ । (ग)

---

(क) एताभ्यां विलोचनाभ्यामार्यपुत्रो दृष्ट इत्यहो मे भागधेय[म्] पद

(ख) जयतु जयत्वार्यपुत्रः ।

(ग) जयतु जयतु महाराजः ।

रामः—(सीतां विलोक्य।) वत्स, अकाण्डपतितसुधावृष्टिसदृशं सीता-
नम् ।

लक्ष्मणः—आर्य, एवमेतत् । (अगस्त्यं प्रति।) भगवन्, अत्र लतामण्डपे
तमासनपरिग्रहः क्रियताम् ।

सर्वे—तथा । (इत्युपविशन्ति।)

लक्ष्मणः—भगवन्, कथमासादिता जानकी ।

अगस्त्यः—श्रूयताम् ।

रामः—अवहिताः स्मः ।

अगस्त्यः—पूर्वमत्र वने दुर्वासाः कानिचिद्दिनानि तपः कृतवान् ।

मधुकरिका—सुलहकोव्वो क्खु एसो महेसी सुणिअदि । (क)

रामः—ततस्ततः ।

अगस्त्यः—तस्मिन्समये तेषु तेष्वाश्रमेषु तीव्रतपःशङ्किना महेन्द्रेण
ष्टानां चरन्तीनां मध्ये हरिणी नाम काचिदेतत्तपोवनं प्रविश्य पुष्पा-
वाचिनोत् ।

रामः—हन्त, महान्प्रमादः ।

अगस्त्यः—ततः परमभिषेकायागच्छन्नयं दुर्वासास्तामवलोक्य 'अये
रिणि, यतोऽस्मद्देवतार्चनोचितानि कुसुमान्यवचिनोषि, ततस्त्वन्नामसदृ-
मेवाकृतिमेहि' इति शशाप । तदानीमेव परित्यज्य वनमिदमन्तर्हितश्च ।

मधुकरिका—अम्हहे, अदिणिट्ठुरदा तावसाणम् । (ख)

लक्ष्मणः—कथमस्यास्तदुपरमो जातः ।

अगस्त्यः—ततो हरिणीभूतां हरिणीमादायास्मदन्तिकं प्राप्ताभिरति-
रुणमाक्रन्दन्तीभिरप्सरोभिरभ्यर्थितेन मया कृपावशेनाभिमन्त्रिता दुर्वा-
सेऽर्पिता । तस्मिन्वने नास्याः प्रत्यासत्तिरासीत् । (१)

लक्ष्म—किमाश्चर्यम् ।

---

सुलभकोपः खल्वेष महर्षिः श्रूयते ।

रा) अहो, अतिनिष्ठुरता तापसानाम् ।

दवदहनदग्धमूर्तेः काननलक्ष्म्याः पुनर्नवीकरणम् ।
उपकर्तुरखिलजगतां घननिकरस्य स्वभाव एवायम् ॥ ४०

**अगस्त्यः**—अयमेवाद्याप्यनुवर्तमानः शापो महानस्मिन्वने कुसु वचिन्वन्तीं जानकीमस्पृशत् ।

**रामः**—(साश्चर्यम् ।) किमेतावन्तं कालं हरिणीभूय स्थितेयम् ।

**मधुकरिका**—(स्वगतम् ।) तस्सिं एव्व समुवट्ठिदाए हरिणी व्वम् । (क)

**अगस्त्यः**—अहमेकाकिनीमस्मदाश्रमे तिष्ठन्तीमितस्ततः द्रव मदृष्टपूर्वां हरिणीं समाधिना जानकीं निश्चित्य तत्क्षणमेव शापान्मो त्वा भवदन्तिकमनैषम् ।

**रामः**— परोपकारशीलत्वं परदुःखासहिष्णुता ।
दयापरत्वं दाक्षिण्यं सतां स्वाभाविका गुणाः ॥ ४१

**अगस्त्यः**—अनया जानक्या लक्ष्मणेन सह महान्तं कालं वर्ते अपि च ।

दोषध्वान्तं क्षालयन्ती नराणा-
माकल्पान्तं नन्दयन्ती जगन्ति ।
स्फायज्ज्योत्स्नापूरपाण्डुस्त्वदीया
जीयात्कीर्तिः श्रीनिधे राघवेन्द्र ॥ ४२ ॥

**रामः**—महान्प्रसादः ।

**अगस्त्यः**—किं ते भूयः प्रियमुपकरोमि ।

**रामः**—इतः परं किं प्रियमस्ति । तथापीदमस्तु भरतवाक्यम् ।

समयविहितवर्षैः सस्यपूर्णां धरित्रीं
जनयतु जलदौघः प्रेरितो वासवेन ।
भवजलनिधिमध्ये मज्जतां मानवानां
भवतु तरणिरूपा संगतिः सज्जनानाम् ॥ ४३

संपूर्णम् ।

(क) तस्मिन्नेव समुपस्थितया हरिण्या भवितव्यम् ।

# KÂVYA-MÂLÂ

This magazine of Sanskrit Literature is published every month. It contains choicest, old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhâṇas, Prahasanas, Chhandas, Alankâras &c. Where best commentaries are available, they are published with the text. In the absence of commentaries notes are given on antique or obscure words. An attempt has also been made at a short history of every writer, to fix the date of the period when he flourished and to give a list of his works. Each number consists of 100 pages.

## RATES OF SUBSCRIPTION.

| | | | |
|---|---|---|---|
| Per annum (in advance) | Rs. 6–0 | With postage | Rs. 6–12. |
| Single copy ... ... ... | Rs. 0–10 | ,, ,, | Rs. 0–11. |

Intending subscribers should send their names and subscriptions to "the Proprietor of the Nirṇaya-sâgara Press, Kâlbâdevî Road, Bombay."

## काव्यमाला ।

हें संस्कृत पुस्तक प्रतिमासास प्रसिद्ध होत असतें। यांत सुरस, प्राचीन आणि दुर्मिळ अशीं काव्यें, नाटकें, चम्पू, भाण, प्रहसनें, छन्द, अलंकार इत्यादि ग्रन्थांचा समावेश होत असतो। ज्या ग्रन्थांच्या टीका उपलब्ध असतील ते ग्रन्थ सटीक छापले जातात; परंतु टीकारहित ग्रन्थांतील दुर्बोध शब्दांवर टिप्पणी देण्यांत येते। कवींचें वृत्त, काल व ग्रन्थ इत्यादिकांविषयीं अलीकडील शोधांवरून लिहिलेली माहितीही जागोजाग दिली जाते। प्रत्येक अङ्कांत १०० पृष्ठें असतात।

### किंमतीचे ठराव।

| | | | |
|---|---|---|---|
| वर्षास (आगाऊ) | ... रु० ६–०. | टपालहांशील सुद्धां | ... रु० ६–१२. |
| फुटकळ अङ्कास | ... रु० ०–१०. | ,, ,, | ... रु० ०–११. |

ज्या कोणांस घेणें असेल त्यांहीं आपलीं नांवें आणि वर्गणी "मुम्बईत काळबादेवीच्या रस्त्यावर निर्णयसागर छापखान्याचे मालक" यांच्या नांवें पाठवावीं।

## काव्यमाला।

यह संस्कृत पुस्तक प्रतिमास प्रसिद्ध होता है। इसमे उत्तम, प्राचीन और दुर्लभ काव्य, नाटक, चम्पू, भाण, प्रहसन, छन्द, अलंकार आदि ग्रन्थोंका संग्रह होता है। जिन ग्रन्थोंकी टीका मिलती हैं वे सटीक छापे जाते हैं, परंतु टीकारहित ग्रन्थोंमे दुर्बोध शब्दोंपर टिप्पण लिखा जाता है। कवियोंका देश, काल, उनके किये ग्रन्थोंके नाम, इत्यादि विषय भी यथाज्ञान लिखा जाता है। प्रत्येक अङ्कमे १०० पृष्ठ रहते हैं।

### मौल्यका नियम।

| | | | |
|---|---|---|---|
| वार्षिक (अग्रिम) | ... रु० ६–०. | डाकव्ययसहित ... | रु० ६–१२. |
| फुटकर अङ्कका | ... रु० ०–१०. | ,, ... | रु० ०–११. |

जिनको लेना हो वे अपना पत्ता और मूल्य "मुम्बईमे कालकादेवीके रस्तेपर निर्णयसागर छापखानेके मालिक" के पास भेजें।

